॥१॥

॥श्रीगणेशायनमः॥देवं त्रैलोक्यशोभाढ्यं त्रिवेदहृद्यं
गमं॥ अमर्त्यमर्त्यजं वंदे शिवं शशिखामणिं॥१॥
तस्मिन्विप्रकृताः काले तारकेण दिवौकसः॥ तुरा
साहं पुरोधाय धाम स्वायंभुवं ययुः॥१॥ तस्मि
न्निति॥ तस्मिन्काले पार्वतीशुश्रूषाकाले॥ तारकेणना
मव ज्ञागतनयेन केनचिदसुरेण विप्रकृता विप्रकृता
विजिता इत्यर्थः॥ दिवं स्वर्गः ओकः स्थानं येषां ते दिवौ
कसो देवाः॥ दिवं स्वर्गे तरिक्षे चेति विश्वः॥ द्यौरोक ॥१॥

इतिपक्षेपृषोदरादित्वात्साधुः॥तुरंत्वरितंसहयति
अभिभवत्यरीनितितुराषाट्॥सहयतेश्चौरादिकात्क्वि
प्॥नहिवृतीत्यादिनापूर्वपदस्यदीर्घः॥प्रतिग्रहणेप्य
धिकस्यापिग्रहणात्॥मुग्धबोधेस्तुराशब्दाव्यय
वंतेइत्याचष्टे॥आचष्टा॥तंतुरासाहंइंद्रं॥सहेःसो
ढःसइषत्वंनाजादिषुविभक्तिषुस्याद्रूपत्वात्॥पु
रोधायपुरस्कृत्यस्थयंध्रुवःब्रह्मणःइदंस्वायंभु
वं॥संज्ञायाधिरनित्यत्वात्॥ओगुणइतिगुणे

॥२॥

नास्ति॥ धामस्थानं ययुः ब्रह्मलोकं जग्मुरित्यर्थः॥१॥
तेषामाविरभूद्ब्रह्मा परिम्लानमुखश्रियां॥ सरसां
सुप्तपद्मानां प्रातर्दीधितिमानिव॥२॥ तेषामिति॥
परिम्लाना परिक्षीणा मुखश्रीर्येषां तेषां तथोक्तानां
तेषां ब्रह्मा सुप्तपद्मानां मुकुलितारविंदानां सरसां
प्रातः दीधितिमानिव सूर्य इवाविरभूत् प्रकाश
मानो भूत्॥ प्रकाशे प्रादुराविः स्यादित्यमरः॥
सूर्योपमाने न तेषां म्लानिहरणं सूचितं॥ अत्रोपमा ॥२॥



॥कुमा॰ सटी

वाच्यभेदकरोपमा २

लंकारः॥ तल्लक्षणं तु॥ स्वतः सिद्धेन भिन्नेन संमतेन च धर्मतः॥
साम्यमन्येन वर्ण्यस्य वाच्यं चेदेकदोपमा॥ २॥ अथ सर्वस्य
धातारं ते सर्वे सर्वतोमुखं॥ वागीशं वाग्भिरर्थ्याभिः प्रणि
पत्योपतस्थिरे॥ २॥ अथेति॥ अथ॥ आविर्भावानंतरं॥
ते सर्वे देवाः सर्वतः समंततः मुखानि यस्य तं सर्वतोमु
खं चतुर्मुखमित्यर्थः॥ वाचां विद्यानामीशं वागीशं सर्व
स्य धातारं स्रष्टारं ब्रह्माणं प्रणिपत्य नमस्कृत्य अर्थाद
नपेताभिरर्थ्याभिः यथार्थाभिरित्यर्थः॥ धर्मपथ्यर्थन्या
यादपेतादिति यत्प्रत्ययः॥ वाग्भिरुपतस्थिरे तुष्टुवुरित्यर्थः॥

उपाद्देवपूजासंगतिकरणपथिष्विति वक्तव्यादात्मनेपदं ॥२॥
स्तुतिप्रकारमाह ॥ नमइत्यादिभिर्द्वादशभिः श्लोकैः ॥
नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने ॥ गुणत्रयवि
विभागाय पश्चाद्भेदमुपेयुषे ॥४॥ नम इति ॥ हे भगवन्सृ
ष्टेः प्राक् ॥ अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजा
हियुक्ते इति ॥ अञ्चूत्तरपदयोगे पंचमी ॥ केवलात्मने
एकरूपाय ॥ आत्मा वा इदमेक एवाग्रे आसीदिति श्रुतेः ॥
निर्णीते केवलमिति त्रिलिंगं त्वेककृत्स्नयोरित्यमरः ॥
पश्चात्सृष्टिप्रवृत्तिकाले विभज्यतेनेनेति विभागो ॥२॥

भेदोपाधिः गुणानां सत्वादीनां त्रयस्य विभागो यस्य
तस्मै ॥ गुणाः सत्वं रजस्तमइ समरः ॥ भेदमुपेयुषे प्रा
सवते ॥ उपेयिवाननाश्वाननूचानश्चेति निपातः ॥ अ
त एव त्रिमूर्तये ब्रह्मविष्णुरुद्ररूपाय तुभ्यं नमः ॥
नमः स्वस्तीत्यादिना चतुर्थी ॥ उक्तं च ॥ नमो रजो
जुषे सृष्टौ स्थितौ सत्वमयाय च ॥ तमोरूपौ संहा य
रे त्रिरूपाय स्वयंभुवे इति ॥ ७ ॥ यदमोघेति ॥ नजा
यत इत्यजः तस्य संबुद्धिः अज ॥ त्वयाआपं र्लेभे

।।४।। र्ध्येयदमोघं अवध्यं बीजं वीर्यं उप्तं विसृष्टं ।। शुक्रं तेजो
रेतसी च बीजं वीर्येंद्रियाणि चेत्यमरः ।। अतो बीजात्
चराचरं स्थावरजंगमात्मकं ।। समाहारे द्वंद्वस्यैकवद्भावः ।।

।। यदमोघमपामंतरुप्तं बीजमज त्वया ।।
।। अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ।।५।।

विश्वं जगदुत्पन्नमिति शेषः ।। अतस्तस्य विश्वस्य प्र
भवः प्रभवत्यस्मादिति प्रभवः कारणं गीयसे ।। अत्र मनुः ।।
अप एव ससर्जादौ तासु वीर्यमवासृजत् ।। तदंडमभव ।।५।।

द्वैमं सहस्रांशुसमप्रभमिति ॥५॥ तिसृभिरिति ॥ एकः स्र
ष्टेः प्राक् केवलं स्वं तिसृभिरवस्थाभिः त्रैगुण्यमयी
भिर्महिमानं निजं दर्शयितुमुदीरयन् प्रलयस्थितिसर्गा

॥ तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ॥
॥ प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥ ६ ॥

णां कारणतां गताः ॥ विवरणत्वान्नेगलार्थदोषः ॥
ष्ट्रत्वे सृजते लोकान्विष्णुत्वे पालयत्यपि ॥ रुद्र
२ त्वे संहरत्येव तिस्रोवस्थाः स्वयंभुव इति ॥ ६ ॥ राम ॥

॥५॥ ।स्त्रीपुंसाविति॥ स्त्री च पुमांश्च स्त्रीपुमांसौ॥ अचतुरे
त्यादिना प्रत्ययांतो निपातः॥ सिसृक्षया स्रष्टुमि
च्छया भिन्नमूर्तेः द्विधाकृतदेहस्य ते तवात्मनो दे
हस्य भागौ॥ आत्मा देहे धृतौ जीवे स्वभावे परमा
॥फलस्य वृद्धिकर्तृत्वं मुत्वं मिथुनस्य वृद्धिकर्तृत्वं॥
॥माह॥ स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृ॥
॥क्षया॥ प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ॥७॥
त्तिनि इतियादयः॥ तावेव भागौ प्रसूतिभाजः उत्प ॥५॥
त्तिभाजः सृज्यत इति सर्गः॥ तस्य योनिः सृष्टेरित्यर्थः॥

माताचपिताचपितरौ॥स्मृतौ॥पितामात्रे सेवकृशेषः॥
अत्रमनुः॥द्विधाकृत्वात्मनोदेहमर्द्धेनपुरुषोभवत्॥
अर्द्धेननारीतस्यांतुविराजमसृजत्प्रभुरिति॥७॥
॥स्वकालपरिमाणेनव्यस्तरात्रिंदिवस्यते॥
॥स्वप्नावबोधौभूतानांतावेवप्रलयोदयौ॥८॥
स्वकालेति॥स्वस्यकालस्यपरिमाणेन॥चतुर्युगस
हस्त्रंतुब्रह्मणोदिनमुच्यते॥रात्रिश्चैतावतीतस्य
ताभ्यांपक्षादिकल्पना॥इत्थंरूपेणव्यस्तंरात्रिं

॥द्वि०॥ दिवंरात्र्यहनीयस्यतस्य॥यद्यपिअचतुरेत्यादिनासू
त्रेण॥रात्रिश्चदिवाचरात्रिंदिवमितिसप्तम्यर्थेव
र्तिंद्वंद्वस्यैकत्वं॥तथापिदोषामन्यमहर्दिवमन्या
रात्रिरित्यादैकर्मार्थेवदत्रापिप्रतिपदिकार्थवृत्ति
तंकथंचित्प्रयोगबलात्आश्रयणीयं॥तेतव
योस्वप्नावबोधौतावेवभूतानांप्रलयोदयोस्थ
ष्ठिसंहारौ॥यथाहुः॥यदैवदेवोजागर्तितदेवंचे
ष्टतेजगत्॥यदास्वपितिशांतात्मातदासर्वंप्रलीयते ॥द्वि०॥
इति॥एतद्दैनंदिनसृष्टिप्रलयाभिप्रायं॥महप्रलय

 

स्यलुब्रेत्मणोवर्षपूगा तां त भावि त्वादित्ति॥ त्वंजग द्योनिरिति॥
हे भगवन्नेश जे द्योनि जगत्कारणं स्वयमयोनिरजत्वात्दका
रणवू: अतयतीत्यत:॥प ... चाद्यचू॥जगतामंतोजग
संहर्ता स्वयमनेतक: नित्यत्वात्दंकररहित:॥जगदादि: त-८

॥जगद्योनिरयोनि स्त्वं जगदंतोप्यनंतक:॥
॥जगदादिरनादिस्त्वं जगदीशोप्यनीश्वर:॥ ५॥

स्टष्टे: प्रागपि नित्सद्दूसर्थ:॥अतएव त्वं अनादिरादि
रहित: जगतामीशोनियंता स्वयमनीश्वर: अनियं
वा न्यसर्थ:॥यसौइमानि फ्रूतानि जायंते येन जातानि

॥७॥ जीवंतीत्यादिश्रुतिरेव प्रमाणं ॥ अत्रायोनिरित्यादौ नञ्तत्
रो२ पुरुषाश्रयेण विरोधाभासः ॥ बहुव्रीहिणा तत्परिहारः ॥
इति विरोधालंकारः ॥ यथाहुः ॥ विरोधाभासत्वं विरोध
इति ॥ ७ ॥ तत्तु भपंचस्यैव जन्मविधानादेरपि परापे
५स क्षित्वांह ॥ आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ॥
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥ १० ॥ आत्मा
नमिति ॥ हे भगवन् त्वं आत्मानं लोकानुग्रहार्थं ब्रह्मादि
रूपेण सादयिष्यन् स्वस्वरूपमात्मनैव वेत्सि जानासि ॥ ॥७॥
सर्वोपि क्रियाकर्तव्यार्थज्ञानपूर्वकेतिभावः ॥ तथात्म

नात्मानं आत्मन्येवेत्यत्रापि संबध्यते॥स्वस्मिन्नेव सृजसि॥
अधिष्ठानमपि स्वयमेवेत्यर्थः॥स्वे महिम्नि प्रतिष्ठितमिति
श्रुतेः॥ऋतिना समर्थेन द्वंद्वं सर्वत्र संबध्यते॥आत्मना
स्वेनैव आत्मन्येव प्रलीयसे॥स्वस्मिन्नेव प्रलीनो भवसि॥
लीयते है वादिवत्त्वात्कर्तरि लिट्॥प्रकृत्यादि भ्यनु
पसंख्यानात्सर्वत्र आत्मनेति तृतीया॥नहि ते प्रपंचस्य
वज्ञानोत्पत्तिलयेषु परापक्षेति फलितार्थः॥ १॥
द्रवेति॥त्वमित्यनुसंबध्यते॥हे भगवन्नू त्वं द्रवः सरि
समुद्रादिवद्रसात्मकोऽसि॥संघातेन निबिडसंयोगे ३१

॥९॥ नकठिनः महीधरादिवत् स्थूलः इंद्रियग्रहणयोग्यो
घटादिवत्॥ सूक्ष्मोऽतींद्रियोसि परमाण्वादिवत्॥ ल                    श्लो २
तन२ घुरुर्वयोग्योसि तूलादिवत्॥ गुरुर्हेमादिवत् अत्र
॥ द्रवः संघातः कठिनः स्थूलः सूक्ष्मो लघुर्गुरुः॥
॥ व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु॥११॥
व्यक्तेतरः कारणरूपश्चासि॥ एवं विभूतिषु ते॥१॥ लनीयो असि॥ व्यक्तः॥ कार्यरूपोसि महदादिकलितेषु ले
तव प्राकाम्यस्य भा ... प्राकाम्यं यथाकामं॥११॥
उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणं॥ कर्मय                    ५८॥

ष्टः फलं स्वर्गस्तासां त्वं प्रभवो गिरां ॥ १२ ॥ उद्घात इति । हे भ
गवन्यासां गिरां वाचां उद्घातः उपक्रमः प्रवृत्त ओंकारात्म
कः ॥ ॐकार प्रणवौ समौ इत्यमरः ॥ स्यादभ्यादानमुद्घा
त आरंभ इत्यमरः ॥ इदमुपसंहारस्याप्युपलक्षणं ॥ ब्रह्म
णः प्रणवं कुर्यादादावंते च सर्वदा ॥ स्रवत्येनः कृतं पूर्वं
परस्ताच्च विशीर्यत इति शिक्षावचनात् ॥ नीयंते येर
र्थविशेषा इति न्यायाः स्वराः उच्चावचस्वरविशेषादर्थप्र
तिपत्तिः ॥ यथेंद्रशत्रुस्वरलोपराधादिति ॥ यासां त्रिभि
र्न्यायैः स्वरैरुदात्तानुदात्तस्वरितैः उदीरणमुच्चा

 

॥१९॥

रणं॥ यासां कर्म प्रतिपाद्यमिति शेषः॥ यज्ञो ज्योतिष्टोमा
दिः ननु चेत्यवंदनादितिभावः॥ फलं स्वर्गः कर्मद्वारेणे
तिशेषः॥ कर्मस्वर्गौ ब्रह्मापवर्गयोरित्यपलक्षणं॥ त
॥त्वामामनंतिप्रकृतिं पुरुषार्थप्रवर्तिनीं॥
॥तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः॥१३॥
तासां गिरां वेदवाचामित्यर्थः॥ प्रभवत्यस्मादितिप्रभ

प्रवर्तकः=३

वः कारणं प्रैणेतां का तो वा मतभेदेन॥१२॥ सांख्यमेते
न स्तुवंति॥ त्वामिति॥ हे भगवन् त्वां पुरुषस्यार्थः भो
गापवर्गरूपः तदर्थं प्रवर्ततइति पुरुषार्थप्रवर्तिनीं तां

॥१९॥

प्रकृतिं त्रैगुण्यात्मकं मूलकारणं ॥ प्रकृतिः पंचभूतेषु प्रधा
ने मूलकारणे इति यादवः ॥ आमनंति कथयंति ॥ म्नाअ
भ्यासे इति धातोः लट् ॥ प्रघाध्मास्थाम्नेत्यादिना मनादेशः ॥

॥ त्वं पितॄणामपि पितादेवानामपि देवता ॥
॥ परतोऽपि परश्चासि विधाता वेधसामपि ॥ १४ ॥

प्रकृतिपुरुषभेदाग्रहणात् प्रकृतेरभेदव्यपदेशः ॥ त्वा
मेव तां प्रकृतिं साक्षित्वेन पश्यतीति तद्दर्शिनं उदासीनं
कूटस्थं पुरुषं विदुः ॥ विदंति ॥ विदो लटो वेति उसादेशः ॥

॥१॥ अजामेकां मितिश्रुतिरत्रमूलं॥१३॥ त्वंपितॄणामिति॥हे
भगवन् त्वं पितॄणामग्निष्वात्तादिनामपि पिता तेषामपि तं
पूजनीय इत्यर्थः॥परतोपिपरश्चासि सर्वोत्तरोसीदित्यर्थः॥
इंद्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः॥मनसश्च परा
बुद्धि बुद्धेरात्मा महान्॥महतः परमव्यक्तमव्यक्ता
त्पुरुषः परः॥पुरुषान्न परं किंचित्सा काष्ठा सा परा गति
रिति॥सर्वोत्तरत्वाभिधानात्॥वेधसां दक्षादीना
मपि विधाता स्रष्टासि॥१४॥त्वामेवेति॥त्वाम्यत्त्वमसि ॥१०॥
२॥देवानामिंद्रादीनामपि देवता तेषामपि पूजनीय इत्यर्थः॥३॥

ढः शाश्वतः नित्यः शैषिको ऽण् प्रत्ययः॥ यद्यपि कालाष्टा
ञीसलोपवादः॥ अत एव सूत्रकारस्यापि प्रयोगः॥
येषां च विरोधः शाश्वतिक इति॥ तथापि प्रयोगात्सा
धुरिति वामनः॥ शाश्वतमिति प्रयुक्तेरिति शाश्वतः॥

॥त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः॥
॥वेद्यं वेदयिता चासि ध्याता ध्येयं च यत्परं॥१५॥

त्वमेव हूयत इति हव्यं हविः ज्याद्विकं जुहोतीति होता य
जमानश्चासि॥ भोज्यमभ्यवहार्यमन्नं॥ भोज्यं॥ क्षय
इति निपातनात्कृत्याभावः॥ भोक्ताऽत्तादश्चासि॥ वे

॥११॥

धंसाक्षात्कार्यवस्तु॥ वेदयित्वा साक्षात्कर्त्तासि॥ ध्यातय न
सरं वस्तु ध्येयं त्वमसि॥ साक्षात्करण सौंच भृत प्रत्यय
मे विषप्रवाहो ध्यानं॥ १५॥ इति ति॥ वेधाः ब्रह्मा इति तेभ्यो दे
वेभ्यः॥ आख्यापयोग इति आपादाने पंचमी॥ यथार्थाः

॥इति तेभ्यः स्तुतीः श्रुत्वा यथार्था हृदयंगमाः॥
॥प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः॥ १६॥

सत्याः अतएव हृदयं गच्छंति हृदयंगमाः॥ खच्च करणे
गमः सुप्सुप संख्यानमिति च प्रत्ययः॥ अरुर्द्विषदित्या ॥११॥
दिना मुमागमः॥ इति स्तुतीः स्तोत्राणि श्रुत्वा प्रसादाभि
मुखः अनुग्रहप्रवणः सन् दिवौकसो देवान् प्रत्युवाच॥ १६॥

अथ कविराह ॥ पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ॥ प्र
वृत्तिरासीच्छब्दानां चरितार्थी चतुष्टयी ॥ १७ ॥ पुराणस्येति ॥
चत्वारोवयवायस्याः सा चतुष्टयी चतुर्विधा ॥ संख्या
यावयवेतयप् ॥ टिड्ढाणञ्जीत्यादिना ङीप् ॥ शब्दानांप्र
वृत्तिः जातिगुणक्रियाद्रव्यभेदेन ॥ तत्र जातिवाचि
नो ब्राह्मणादयः गुणवाचिनः शुक्लादयः क्रियावाचि
नः पाठकपाचकादयः द्रव्यवाचिनः पृथिव्यादयः
अथवा वैखरीप्रमुखावाक् ॥ उक्ताच ॥ वैखरी श
ब्द निष्पत्तिर्मध्यमा श्रुतिगोचरा ॥ द्योतितार्थाच प
श्यंती सूक्ष्मा वागनपायिनीति ॥ पुराणस्य पुरात

नस्यपृषोदरादित्वात्साधुः॥कवेः कवयितुस्तस्यब्रह्मणः
चतुर्मुखेसमीरितासती॥तद्धितार्थेत्यादिनानुत्तरप
दसमासः॥समाहारसमासेतु-चतुर्मुखीस्यात्॥चरि
तार्थाअ-:न्वर्था आसीत्॥चतुर्मुखोच्चारणा
च्चातुर्विध्यंसफलमासीदित्यर्थः॥१७॥भगवा
नाह॥स्वागतंस्वानधीकारान्प्रभावैरवैब्यवः॥युग
पद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः१८॥स्वाग
तमिति॥हेप्राज्यविक्रमाः॥प्रभूतविक्रमाः प्राज्यं
भूरिप्रभूतंचेत्यमरः॥ स्वान्स्वकीयानधी

तं द्व

कारान्॥नियोगादुपसर्गस्य घञ्॥मनुष्ये बहुलमिति दीर्घः॥
प्रभावैः सामर्थ्यैः अवलंब्य आस्थाय॥अधिकारेषु स्थित्वा
पीत्यर्थः॥युगपत् समकालं प्राप्तेभ्यः आगतेभ्यः॥युगपदा
गमनान्महत्कार्यं अनुमीयत इति भावः॥युगबाहुभ्यो दी
र्घबाहुभ्य इत्यर्थः॥वः युष्मभ्यं।बहुवचनस्य वस्नसावि
ति वसादेशः॥क्रियाग्रहणात् संप्रदानत्वं॥स्वागतं स्वाग
नागमनं कावुरत्र अनुसंधेया॥२८॥किमिदं द्युतिमात्मी
यां नबिभ्रति यथापुरा॥हिमक्लिष्टप्रभावानि ज्योतींषी
वमुखानि वः॥२९॥किमिति॥हे वत्साः पुत्रकाः॥वत्सोना

कुटजे वर्षे लग्ने केतनयादिके इति वैजयंती ॥ किमिदमिति वा
॥१२॥ क्यार्थः परामृश्यते ॥ हिमेन नीहारेण क्लिष्टप्रभावाणि निः
प्रभावानि ज्योतींषि नक्षत्राणीव ॥ दीप्तिस्तारा हुताशेषु
ज्योतिरिति शाश्वतः ॥ वः युष्माकं मुखानि पुरा यथा पूर्वमि
वात्मीयां द्युतिं न बिभ्रति ॥ बिभ्रती परिखुडु चास्म इति पु
रायोगे भूते लोपि लट् ॥ किं निबंधनमित्यर्थः ॥१९॥ ॥ उक्तं च
प्रपंचयति ॥ प्रशमात्क्षिप्तसद्रश्मिः ॥ प्रशमादर्चिषामे
तदनुद्गीर्णसुरायुधं ॥ वृत्रस्य हंतुः कुलिशं कुंठिताश्री
व लक्ष्यते ॥२०॥ प्रशमादिति ॥ अर्चिषां तेजसां प्रशमा ॥१३॥

त[..]निर्वाणात् अनुद्गीर्णसुरायुधं ॥ अनुत्पादितचित्रः प्र
भमित्यर्थः ॥ स्वयमेव सकलकार्यसाधकत्वात् ॥ छत्रस्य
हेतुं दृश्येत कुलिशं वज्रं कुंठिता अस्य यो यस्य तत्कुं
ठितास्रीव ॥ स्त्रियः पाल्यस्ति कोटयः इत्यमरः ॥ लक्ष्यते द्विरदस्यते ॥२०॥

॥ किं चायमरिर्दुर्वारः पाणौ पाशः प्रचेतसः ॥
॥ मंत्रेण हतवीर्यस्य फणिं दैन्यमाश्रिताः ॥२१॥

किं चामेयैति" किं चायमरिभिः दुर्वारो दुर्धर्षः प्रचेतसः नो
वरुणस्य ॥ प्रचेता वरुणः पाशी इत्यमरः ॥ पाणौ पाशः रज्जु
रायुधविशेषः ॥ मन्त्रेण हत वीर्यस्य प्रतिषिद्धशक्तेः ॥

फणिनः सर्पस्य दैन्यं शोच्यत्वं आश्रिता ॥ अत्र फणिनि दृष्ट

स्व दैन्यं पात्रेऽसंभवात् दैन्यमिव दैन्यमिति च लुप्तनादसंभ

वद्वस्तुसंबंधो निदर्शनालंकारः ॥२१॥ कुबेरेति ॥ अप

विद्धा त्यक्ता गदा येन सोऽपविद्धगदः ॥ अलएवं शाखः द्रुमइ भग्न

॥ कुबेरस्य मनःशल्यं शंसतीव पराभवं ॥

॥ अपविद्धगदो बाहुर्भग्नशाखइव द्रुमः ॥२२॥

वस्थितः ॥ कुबेरस्य बाहुः मनःशल्यं दुखहेतुस्लाघल्य

प्राय मित्यर्थः ॥ पराभवं शत्रुकृतमिति शेषः ॥ शंसती

वकथयतीव ॥ लक्षणया अनुमापयतीत्यर्थः ॥ बाहोर्मु

ख्यकथनस्यासंभवादिवशब्दोऽप्यत्र एव ॥२२॥

यमोपेति॥ यमोपि अस्तं नाशं मिताः प्राप्ताः॥ अस्तमिति म
कारांतमव्ययं॥ तस्या द्वितीयेसेति समासः॥ अस्तमिता
त्विषो यस्य तेन निस्तेजस्केन दंडेन भूमिं विलिखन् अमोघो

॥ यमोपि विलिखन्भूमिं दंडेनास्तमितत्विषा॥
॥ कुरुतेस्मिन्नमोघेपि निर्वाणालातलाघवं॥२३॥

पि अग्निरिति भावः॥ अस्मिन्दंडे निर्वाणालातस्य शांतोन्मु
कस्य यल्लाघवं कैवल्यं तत्कुरुते॥ अलातमुल्मुकं ज्ञेयमिति ह
लायुधः॥ निर्वाणो वात इति निपातनान्निष्ठात्वं॥ अत्रा
पि लाघवमिव लाघवमिति कल्पनान्निदर्शनालंकारः॥२३॥

॥१५॥ अमीति॥ प्रतापक्षत्या तेजःक्षये रात्रौ लताः अमी आदित्याः द्वा
दशेति शेषः॥ कथंभूतै न हेतुनाइत्यर्थः॥ चित्रन्यस्ताश्चित्रे लिखि
ताइव प्रकाममत्यंतमालोकनीयतां दृश्यतां गताः॥२४॥

॥अमीच कथमादित्याः प्रतापक्षतिशीतलाः॥ चित्रंन्यस्ता॥
॥इव गताः प्रकाममालोकनीयतां॥२४॥ पर्याकुलत्वान्मरुतां॥
॥वेगभंगोनुमीयते॥ अंभसांओघसंरोधः प्रतीपगमनादिव॥२५॥

स्खलितगति पर्याकुलत्वादिति॥ मरुतां वायुनामपि अष्टानामिति शेषः॥
कल्लोल॥२॥ पर्याकुलत्वात् हेतोः वेगभंगोंभसां प्रतिपगमनात् प्रति
कुलगमनात् नस्तानारोहणादित्यर्थः॥ ओघसंरोधः प्रवा ॥१५॥
॥२५॥ हप्रतिबंधइवानुमीयते॥ आवर्जितेति॥ आवर्जितेषुप

रिभवद्भः खावनम्रेषु जटानांमौलिषु जटाजूटेषु विलबिन्यः
संसिन्यः शशिकोटयश्चंद्ररेखा येषां ते तथोक्ताः रुद्राणामपि ल
एकादशानामिति शेषः ॥ मूर्द्धानः क्षतहुंकारं शंसतीति तथो
क्ताः ॥ हुंकारक्षतस्यानुमापका इत्यर्थः ॥ हुंकारशस्त्रा हि रुद्रा इति ॥ २६ ॥

॥ आवर्जितजटामौलिविलंबिशशिकोटयः ॥
॥ रुद्राणामपि मूर्द्धानः क्षतहुंकारशंसिनः ॥ २६ ॥

लब्धेति ॥ प्रथमं पूर्वं लब्धप्रतिष्ठाः लब्धस्थितयः लब्धेव
कान्शाइत्यन्यत्र ॥ स्वयं बलवत्तरैः पौरुषातिरेकात् बलते
रैः ॥ निरवकाशतादित्यन्यत्र ॥ परैः शत्रुभिः नसर्गाः स

मान्यशास्त्राणि न हिंस्यादित्येवमादीनि॥ अपोद्यंते एभिरित्य
पवादैः स्थूलपृषतीमालभेतेत्येवमादिभिर्विशेषशास्त्रै
रिवस्त्रतव्यावृत्तयः स्वलप्रतिष्ठाभंगाः किं॥ स्वलविषय

॥लब्धप्रतिष्ठाः प्रथमं यस्यं किं बलवत्तरैः॥
॥अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः॥२७॥

संकोचरूपबाधा इत्यन्यत्र॥ विषयसंकोच एव बाधकस्त्वा
चार्याः॥ निषधशास्त्रस्यैव धहिंसापरिहारेलौकिकमात्रे
व्यवस्थापनात् विषयसंकोच इति लै अमिति गहनावगाह
नेन॥२७॥ तद्भूतेति॥ तत्तस्मात् कारणात् हे वत्साः पुत्रकाः॥ ॥१६॥

वत्सास्तर्येकपुत्राहिहर्षवत्संतुवक्ष्यसीतिविश्वः॥ स्वयंपिता
महत्वात्त्वत्सइति आमंत्रयते॥ संभूयागताः इतः मत्तः
किंप्रार्थयध्वं किमिच्छध्वमित्यर्थः॥ ब्रूत॥ यूयमेव लोकर
क्षणेककर्तारइत्यर्थः॥ मयि लोकानां सृष्टिः रक्षा युष्मास्ववस्थि

॥ तद्ब्रूत वत्साः किमितः प्रार्थयध्वं समागताः॥
॥ मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता॥२८॥

ता हि॥ अतस्तदर्थमपि नास्ति मदपेक्षेत्यर्थः॥२८॥ तत
इति॥ ततो भगवतस्तस्मानंतरं वृत्रहा इंद्र गुरुं बृहस्पतिं॥ गु
रुर्गीष्पतिपित्राद्योरित्यमरः॥ मंदानिलेन उद्धतः कंपितः

यः कमलाकरः सहस्रबाहोऽभोऽशलितेन तथोक्तेन ॥ नेत्राणां सहस्रं
तेन चोदयामास ॥ सहस्रग्रहणमतिशयार्थं ॥ अनिमेषाणा
मपि प्रयत्नवशाद्दक्षिस्पंदो न विरुध्यते ॥ सर्गः ॥ सद्वितिः ॥ हरे
रिंद्रस्य ॥ इंद्रो दुश्च्यवनो हरिरिति विश्वः ॥ सहस्रनयनेभ्योऽधिकं

॥ ततोमंदानिलोद्धूतकमलाकरशोभिना ॥ गुरुं नेत्रस ॥
॥ हस्रेण चोदयामास वृत्रहा ॥ २७ ॥ सद्वितेत्रं हरेश्चक्षुःस ॥
॥ हस्रनयनाधिकं ॥ वाचस्पतिरुवाचेदं प्रांजलिर्जलजा ॥

सहस्रनयनाधिकं तदगोचरार्थदर्शित्वादिति भावः ॥ द्विने
त्रियस्य तलु द्विनेत्रं प्रसिद्धत्वाच्चक्षुषोरयं विशेषयइत्यर्थः ॥ १७
चक्षुः चक्षुर्भूतः चक्षुरारोपस्य प्रकृतोपयोगित्वात् सरि

णामालंकारः॥ वाचस्पतिः कस्कादित्वादलुक्॥ षष्ठ्याः पति
पुत्रेत्यादिना सत्वमिति स्वामी॥ तत्र छंदो विषयत्वात्संज
लिः सन्नू जलंजासनं ब्रह्माणं इदं वक्ष्यमाणंमुवाच॥ २०॥
एवमिति॥ हे भगवन् षड्गुणसंपन्न यदात्थ फलव्याहृतयः

॥ एवं यदात्थ भगवन्नाप्तछंनः परे पदं॥
॥ प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो॥ २१॥

परैरिति॥ यद्ब्रवीषि॥ ब्रुवः पचादावां इति ब्रुवादेशः॥
वर्त्तमानसामीप्ये वर्त्तमानवद्वेति वर्त्तमानप्रयोगः॥ वा
मनस्तु भ्रांतोयं प्रयोग इत्याहेति भट्टेलेणालं तभ्रमादिति॥

अहेस्वरूपलक्षणं॥ तदेवं सत्यं नोस्माकं पदमधिकारः परैः
शत्रुभिः आमृष्टं आक्षिप्तं॥ हे प्रभो प्रत्येकं प्रतिपुरुषं
विनियुक्तो लाप्रवेशितस्वरूपः सर्वांतर्यामीत्यर्थः॥ त्वं
कथं न ज्ञास्यसि न वेदयिष्यसि॥ वर्त्तमानेपि वचनप्रयो

॥उक्तमेव प्रपंचयति॥ त्वयादत्तवरोदीर्णस्तारका॥
॥ख्योमहासुरः॥ उपप्लवाय लोकानां धूमकेतुरिवोत्थितः॥३२॥

गोभविष्यत्प्रयोगप्रसिद्धिः॥ अपन्हवे ज्ञः अकर्मकाच्चे
ति आत्मनेपदविकल्पः॥३१॥ त्वयेति॥ त्वया दत्तवरे
ण उदीर्णः दुर्जितः तारक इति आख्या नाम यस्य स ता
रकाख्यो महान् असुरो महासुरः॥ सन्महत्परमेत्या 	१६॥



 

।।दीर्घिकाकमलानामुन्मेषो विकासः ।।
।।साध्यते निष्पाद्यते ।।१।।

दिनात्तत्पुरुषः ।। धूमकेतुरिवउत्पातविशेषइव लोकामुपप्लु
वायोस्थितः ।।३२।। पुरइति ।। अस्य पुरे रविस्तावंतमातपं
तावन्मात्रमेव आतपं तनोति ।। यचलैवयावन्मात्रेयावतीमा
त्रायस्येतियावन्मात्रेणातपेनमात्रापरिच्छेदः ।। अल्पेचप

।।पुरे तावंतमेवास्य तनोति रविरातपं ।। दीर्घिकाकम ।।
।।लोन्मेषो यावन्मात्रेण साध्यते ।। ३३ ।। सर्वाभिः सर्व ।।
।।दा चंद्रस्तं कलाभिर्निषेवते ।। नादत्ते केवलां रेखां हरचू ।।

रिमाणे च मात्रं कार्त्स्न्येवधारणे इत्यमरः ।। ३३ ।। सर्वेति ।। चं
द्रस्तं तारकं सर्वदा हृत्स्नपक्षेपीत्यर्थः ।। सर्वाभिः कलाभि
र्निषेवते ।। कलातुषोडशोभागइत्यमरः ।। किंतु केवलामेकां ।।

डामणीकृतां ।।३४।।

१श्रि॥

केवलं कृत्स्न एकश्चेति शाश्वतः ॥ हरश्चूडामणीकृतां रे
खां नादत्तेन गृह्णाति ॥ ३४ ॥ व्यावृत्तेति ॥ वायुस्तेन स्वभा
वस्तेयं चौर्यं ॥ तेनोद्यानलोपश्चेति यत्तस्य योनलोपश्च ॥
कुसुमस्तेयात् साध्वसं भयं तस्माद्धेतोः उद्याने व्यावृ

॥ व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात् ॥
॥ न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकं ॥ ३५ ॥

त्तगतिर्निवृत्तोद्यानसंचारः सन्नित्यर्थः ॥ सापेक्षत्वे
पि गमकत्वात्समासः ॥ तत्पार्श्वे तत्समीपे तालवृन्तैः उ १सि॥
द्धूयते ॥ तालस्य वृन्तम् स्येतिवा तालवृन्तं तस्यानिला
त् व्यजनपवनादधिकं यथा तथा न वाति ॥ व्यजनेन ता

तद्वंतक्रमित्यमरः ॥ ३५ ॥ पर्यायेति ॥ ऋतवः षट् वसंताद
यः पर्यायसेवामुत्सृज्य पुष्पाणां संभारे संग्रहे तत्पराः ॥
तन्निधानाः आसक्ताः संतइत्यर्थः ॥ तत्परे प्रसितासक्ता
वित्यमरः ॥ उद्यानपालैः सामान्यं साधारणं यथा तथा

॥ पर्यायसेवामुत्सृज्य पुष्पसंभारतत्पराः ॥
॥ उद्यानपालसामान्यमृतवस्तमुपासते ॥ ३६ ॥

तं तारकमुपासते ॥ सेवंते ॥ शीतोष्मादिदोषप्रकाश
नं तु दुरापास्तमिति भावः ॥ ३६ ॥ तस्येति ॥ सरितांपतिः
समुद्रः तस्य तारकस्योपायनानां प्राभृतानां योग्या
नि प्राभृतं तु प्रवेशनं ॥ उपायनमुपाग्राह्यमुपहारस्तथा

परेत्यमरः॥ रत्नानि अंभसामंतरानिष्पत्तेः परिपाकप
र्यंतं॥ विग्रहवाक्यासमासः॥ अथमपिमहत्तायत्नेन प्रतीक्ष्यते॥
कदाचापत्येरनित्यकार्गेणपरि- - - पालयतीत्यर्थः॥२७॥

॥तस्योपायनयोग्यानिरत्नानिसरितांपतिः॥कथ॥
॥मप्यंभसामंतरानिष्पत्तेः प्रतिक्ष्यते॥२७॥ज्वलं॥
॥न्मणिशिखाश्चैनंवासुकिप्रमुखानिशि॥स्थिर॥
॥प्रदीपतामेत्यभुजंगाः पर्युपासते॥२८॥

ज्वलन्निति॥ किंचेतिचार्थः॥ ज्वलंत्योमणीनांशिखा
ज्वालायेषांतेवासुकिप्रमुखाः भुजंगाः सर्पाःश्चैवरि
गाम्श्चध्वन्यते॥भुजंगः खिंगसर्पयोरितिविश्वः॥

॥२०॥



॥कुमा० सटी०

निशिशिखरप्रदीपतां॥ अनिर्वाणदीपत्वं रत्नस्य॥ नं तारकं
पर्युपासते॥ परिचरंति सेवंते॥३६॥ तत्कृतेति॥ इंद्रो
पि तेन तारकेण कृतं तत्कृतं अनुग्रहं प्रसादमपेक्षत
इति तथोक्तः॥ स न मुहुर्दूतहारिभिः दूतप्रापितैः कल्प

॥तत्कृतानुग्रहापेक्षी तं मुहुर्दूतहारिभिः॥
॥अनुकूलयतींद्रोपि कल्पद्रुमविभूषणैः॥३७॥

द्रुमाणां विभूषणैः तत्कृतैरित्यर्थः॥ तं तारकं मुहु
रनुकूलयति॥ अनुकूलं करोति॥३७॥ इत्थमिति॥
इत्थमाराध्यमानो सेव्यमानोपि भुवनत्रयं क्लिश्ना

॥उपकारेण न शाम्येत्॥ २

तिपीडयति॥ तथा हि॥ दुर्जनः प्रत्यपकारेण प्रतिकारेणै
व शाम्येत्॥ अतस्तं प्रकुप्यतीति भावः॥ ४०॥ तेनेति॥
तेन तारकेण अमरवधूनां अमरपत्नीनां हस्तैः करैः

रा

॥इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयं॥ शाम्ये॥
॥त्प्रत्यपकारेण नोपकारेण दुर्जनः॥ ४०॥ तेनाम॥
॥रवधूहस्तैः सदयालूनपल्लवाः॥ अभिज्ञाश्छेदपा॥
॥तानां क्रियंते नंदनद्रुमाः॥ ४१॥

इति भावः॥ तैरपि सदयालूनाः सकंपं छिन्नाः पल्लवा
येषां ते नंदनद्रुमाः छेदाश्च पाताश्च तेषामभिज्ञा अभिजा
नंतीति अभिज्ञाः क्रियंते॥ कृद्योगात्कर्मणि षष्ठी॥ ४१॥

विज्यल इति॥ स तारकः संसुप्तः सन् श्वाससाधारणः श्वा
ससमानः अनिलो येषां तैः॥ ततोप्यधिकेन निद्राभंगभ
यादिति भावः॥ बाष्पसीकरवर्षीभिः तासां रोदनस्याय
मेवावकाश इति भावः॥ सुरबंदीनां सुरावग्रहे स्त्रीणां

॥विज्यते स्म हि संसुप्तः श्वाससाधारणानिलैः॥
॥चामरैः सुरबंदीनां बाष्पसीकरवर्षिभिः॥४२॥

संबंधिभिः॥ प्रग्रहो वग्रहो बंधाभित्यमरः॥ चामरैः
र्विज्यते॥४२॥ तस्याटयेति॥ तेन तारकेण हरितांस्स
योम्नानां॥ हरित्सूर्ये च सूर्याश्वे वर्णे हरि लए वंचके त्याचः॥

खुरैः शफैः क्षुण्णानि हरितालानि ॥ एतेन तेषामौन्नत्यं
सूच्यते ॥ मेरुशृंगाणि उत्पाट्य स्वेषु वेश्मसु आक्रीडंय
ते येषु ते आक्रीडाः तेच ते पर्वताश्च आक्रीडपर्वताः

॥ उत्पाट्य मेरुशृंगाणि क्षुण्णानि हरितो खुरैः ॥
॥ आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥ ४३ ॥

कल्पिताः कृताः इत्यर्थः ॥ ४३ ॥ मंदाकिन्याः इति ॥ सां
प्रतं संप्रति मंदाकिन्याः दिग्वारणानां मदेनाविलं
कलुषं पयः जलमेव शिष्यत इति शेषं शिष्टं ॥ कर्म
र्थे घञ् प्रत्ययः ॥ त्रिष्वन्यत्रोपयुक्तल इति नपुंस

कृतं॥ हिमांभोरुहाण्यसस्यानि तेषां तस्य वाप्यस्तद्वाप्यए
व धाम स्थानं॥ सर्वाण्येतु साट्यस्वदीर्घिका स्वेव प्रतिरोपि
तवानि सूर्यः॥ ७४॥ भुवनेति॥ तस्य तारकस्यापा तात्स

॥ मंदाकिन्याः पयः शेषं दिग्वारणमदाविलं॥ हेमां॥
॥ भोरुहसस्यानां तद्वाप्यो धाम सांप्रतं॥ ७४॥ भुव॥
॥ नालोकनप्रीतिः स्वर्गिभिर्नानुभूयते॥ खिलिभू॥
॥ तविमानानां तदापातभयास्थि॥ ७५॥

मापत्ते भयाद्विमानानां पथि खिलीभूते सति प्रहलीभू
ते सति॥ हे खिलाप्रहते समइत्यमरः॥ स्वर्गिभिर्देवैः
भुवनालोकनेनया प्रीतिः सा नानुभूयते॥ ७५॥

यज्वभिरिति ॥ यज्वभिः विधिवत्तूइष्टवद्भिः ॥ यज्वातु वि
धिनेष्टवान् इत्यमरः ॥ सुरयोद्धिनि विद्वनिप्रत्ययः ॥ वि
ततेष्वध्वरेषु यज्ञेषु संभृतं दत्तं हव्यं हविः मायी वी ॥ श्री

॥ यज्वभिः संभृतं हव्यं विततेष्वध्वरेषु सः ॥
॥ जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः ॥ ५८ ॥

धादित्याणिनिः ॥ सः तारकः नोस्माकं मिषतां पश्य
तां पश्यत्स्वित्यर्थः ॥ षष्ठी चानादरे इति षष्ठी ॥ जात
वेदाः मुखं वन्हिरेव मुखं तस्मात् जातवेदोमुखादा

छिनत्ति॥ अक्षिप्य गृहीत्वेत्यर्थः॥ वृद्धिं तत्क्षेरिति॥
तेन तारकरणो क्षेरुन्नतं तत्क्षेमयानाम हयरत्नम
श्वमेधं परलंम्रेच्छेमणाविलिविभ्यः॥ तस्यमुभ्रेत्या
॥ तत्क्षेरुत्क्षेमवांस्तेन हयरत्नमहारिच॥
॥ देहबद्धमिवेंद्रस्यचिरकालार्जितं यशः॥ ४७॥
दुत्क्षेक्षते॥ देहबद्धं मूर्तिमतमित्यर्थः॥ वाहि लाग्न्या
द्विष्विति विधुत्यानिष्ठायाः परनिपातः॥ चिरकाला
र्जितमिंद्रस्य यशइवाहारि॥ ४७॥ तस्मिन्निति॥

क्रूरे घातुके॥ नृशंसो घातुकः क्रूर इत्यमरः॥ तस्मिन्न
सुरे सर्वेऽपि नो देशेषु ये यत्स्य उपायाः साम ॥ सन्निपा ल स्य
स्मा के प्रकोपे॥ सान्निपातिके विकारे ज्वरादौ॥ सन्नि

॥ तस्मिंस्तूपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः॥
॥ वीर्यवंत्यौषधानीव विकारे सान्निपातिके॥४९॥

पाताच्चेति ठञ् व्याल ऋकृ॥ वीर्यवंति सारवंत्यौष
धानीव प्रतिहतक्रियाः विफलप्रयोगाः॥४९॥
जयेति॥ यत्र हरिचक्रे स्मा कं जयाशा विजयकां

क्षा प्रतिक्षा तेन प्रतिहत्या गुप्ता शिता र्चिषा गरुड लते जसा तेन हरि चक्रेण विष्णोः सुदर्शनेन चास्य कंठे निष्कं उरो कं
करूष णं अर्पितमिवेत्युत्प्रेक्षा ॥ स्वयमेव निष्कं इव स्थि
त इत्यर्थः ॥ साष्टेन्नातेसुवर्णानांहेम्नुरोभूषणेपले ॥

॥ जयाशायत्रचास्मांकेप्रतिघातोशिता र्चिषा ॥
॥ हरिचक्रेणतेनास्यकंठेनिष्कमिवार्पितः ॥ ४८ ॥

दीनारेपिचनिष्कोस्त्रीत्यमरः ॥ ४७ ॥ तदीयाइति ॥
अथसंप्रतिर्निद्राघातएरावतोयेस्ते तथोक्ताः ॥
तस्य तारकस्यइमे तदीयाः गजाः पुष्करावर्त

मे ॥२५॥ र्त कांक्ष्य नामेघानां कूटस्थाः ते आदयो येषु तेषु तोयदेषु ॥
तटाघातं व प्रक्रीडामभ्यस्यंति ॥५०॥ संप्रति कार्यं नि
वेदयंति ॥ न दिक्षामइति ॥ तत्तस्मात्कारणात् विभो

॥ तदीयास्तोयदेष्ववैपुष्करावर्तकादिषु ॥ अभ्य ॥
॥ स्यंति तटाघातं निर्जितैरावतागजाः ॥५०॥ त ॥
॥ दिक्षामो विभो स्त्रष्टुं सेनान्यं तस्यशांतये ॥ कर्म ॥ बं
॥ बंधच्छिदं धर्मं भवस्येव मुमुक्षवः ॥५१॥ ॥२५॥

स्वामिनं मोक्तुं भवंस्य च्छिमिच्छवः मुमुक्षवः मुक्ताः भवस्य
संसारस्य शांतये कर्म एव बंधसंछिनत्ती ति कर्मबंधच्छित्तं ॥

ष्टिपः॥ धर्ममिव आत्मज्ञानहेतु फलमिति पेंद्रो॥ ल
मिवविदित्वा लिप्यस्केमेति इति॥ ज्ञानादेवमुक्तिश्रवणा
ल्लतस्य तारकस्येव श्रांतयेना ज्ञायसेनां नयतीति सेना॥

॥ सेनानीस्त्वष्टेः फलमाह॥ गोप्तारं सुरसैन्यानां॥
॥ नांयं पुरस्कृत्य गोत्रभिन्॥ प्रत्यानेष्यं॥
॥ ति त्रास्तुभ्यो बंदीमिव जयश्रियं॥ ५२॥

नीः चमूपतिः सत्स्कृद्विषेत्यादिना ष्टिपः॥ तं सेनान्यं
चित्तात्त्वष्टिः इच्छामः॥ ५१॥ गोप्तारमिति॥ सुरसैन्यानां गो
प्तारं रक्षितारं यं सेनान्यं पुरस्कृत्य पुरोव्यमिति गति

॥२६॥ त्वात् नमस्सुरस्योर्गस्योरिसकारः॥ गोत्रभिल्ल इंद्रो
जयश्रियं वरीमिव वेदी रुलांस्त्रीमिवृक्षात्त्वभ्यस
कान्नात्प्रस्थानेष्यति॥ तंस्त्रष्टुमिति एवं वैणान्वयः॥५२॥
वचसी ति॥ तस्मिन् बार्हस्पत्येव च सिअवसितेप
॥वचस्य वसिते तस्मिन् ससर्ज गिरमात्मभूः॥
॥गर्जितानंतरां वृष्टिं सौभाग्येन जिगाय या॥५३॥
रिसमासे सति आत्मभूः ब्रह्मा गिरं वाचं ससर्ज
स्टष्टवान्॥ जगादेत्यर्थः॥ यागीः सौभाग्येन मनोहर
त्वेन॥ हृद्यत्वेन सिद्धतेपूर्वपदस्यचेत्युभयपदवृद्धिः॥ ॥२६॥

गर्जितात्गर्जितस्यवानंतरां प्रवृत्तां वृष्टिं जिगाय जि
तवती॥ गर्जितफलत्वात् वृष्टेरिव तद्विलापनाफल
त्वात्गिरः सुभगत्वं वर्ततइति भावः॥ संपत्स्येति॥

॥ संपत्स्यतेवः कामोयं कश्चित्कालः प्रतीक्ष्यतां॥
॥ न त्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मना॥५४॥

अयं वो युष्माकं कामो मनोरथः सेनानीरूपः संपत्स्य
ते सेत्स्यति॥ अपि तु कश्चित्कियानपि कालः प्रतीक्ष्य
तां॥ अस्य सेनान्यः सिद्धौ विषये आत्मना स्वयं सर्गः सृ

२७ ष्टिरेव व्यापारः त्वं नयास्यामि नाहं स्त्रक्ष्यामीत्यर्थः ॥ ५४ ॥
इतइति ॥ इतः भत्तः एव प्राप्तश्रीलब्धोदयः संदेश्यः ॥
इतः मत्त एव क्षयं नाशं नाहति ॥ तथाहि ॥ अन्योरक्ष

॥ कुतइत्याशंक्याह ॥ इतः संदेश्यः प्राप्तश्री ॥
॥ नेतए वार्हति क्षयं ॥ विषवृक्षोपि संव ॥
॥ र्ध्य स्वयं छेतुमसांप्रतं ॥ ५५ ॥

स्तावदास्तां ॥ विषस्य वृक्षोपि संवर्ध्य कुतश्चित्का
रणात् संम्यक् संवर्द्धयित्वा स्वयमेव छेत्तुमसांप्रतं
अनर्हं ॥ असांप्रतमित्यनेन निपातनेनञ भिहि २७

तस्माद्वृक्ष इत्यत्र द्वितीया न भवति ॥ अनभिहिते कर्मणि
द्वितीयाभिधानात् ॥ तथा वामनः ॥ निपातेनाप्यभि
हिते कर्मणि न कर्मविभक्तिः ॥ परिगणस्य प्रायिकत्वात् ॥ ५५ ॥
वृत्त इति ॥ प्राक् पूर्वं तेनासुरेणेदमेव देवैरवध्य

॥ वृतं तेनेदमेवादो मया चास्मै प्रतिश्रुतं ॥
॥ वरेण शमितं लोकानलं दग्धुं हि तत्तपः ॥ ५६ ॥

संवृतं प्रार्थितं मया चास्मै तारकाय प्रतिश्रुतं प्रति
ज्ञातं ॥ प्रत्याङ्भ्यां श्रुवः पूर्वस्यैव संप्रदानत्वाच्चतुर्थी ॥
कर्तव्यं चैतदित्याह ॥ लोकानां दग्धुमलं शक्तं ॥ पर्या

२८॥ मनश्चनेषु त्वमर्थे मतुप्॥ तस्य तपस्तपस्ते वरेण वरदा
नेनत्वामिति॥ पद्धि॥ संयुगेति॥ संयुगे युद्धे नद्धं तं व्या
प्रीयमाणं संयुगे साधु सांयुगीनं॥ प्रतिजनादिभ्यः॥
खञ् इति खञ् प्रत्ययः॥ तं तारकं निषिद्धतस्य स्कंदि
॥ संयुगे सांयुगीनं तमुद्धं तं प्रसहेतकः॥
॥ अंशादृते निषिद्धतस्य नीललोहितरेतसः॥ ५७॥
सितेस्फुरितस्य नीलः कंठे लोहितश्चके शेष्विति नी
ललोहित इति पुराणमिति स्वामी॥ तस्य नीललोहि २८
तस्य धूर्जटेः रेतसः रुद्रस्यांशादृते अंशं विना

कः प्रसहेताभिभवेत् ॥ प्रसहनमभिभवनमिति टीका
कारः ॥५७॥ सहीति ॥ स देवो नीललोहितस्तमसः पारेप
रलोव्यवस्थितं तमोगुणातीतं परं ज्योतिः ॥ परमो
हि ॥ अतएवमयापरिछिन्नप्रभावर्द्धिरवगाढमहि
॥ ननु हरांशस्य कथमीदृशी शक्तिरित्याशंक्य ॥
॥ हा ॥ स हि देवाः परं ज्योतिस्तमःपारे प्रतिष्ठितं ॥ म. ४
॥ परिछिन्नप्रभावर्द्धिर्न मया न च विष्णुना ॥५८॥
मातिशयो न भवति तथा विष्णुना न च ॥ अस्तेतस्य
स्य साध्यतमस्तीत्यर्थः ॥५८॥ तमेति ॥ ते कार्यार्थि

नोरूपं संयमस्तिमितं समाधिनिश्चलं शंभोर्मनः
उमारूपेणोमासौंदर्येण ॥ रूपं स्वभावे सौंदर्ये लिवि
श्वः ॥ अयस्कांतेन मणिविशेषेण ॥ कस्कादिषु ने

॥ संप्रस्कृपायमुपदिशति ॥ उमारूपेणे ॥
॥ रूपं संयमस्तिमितं मनः ॥ शंभोर्यत्नष्ट ॥
॥ माकृष्टुमयस्कांतेन लोहवत् ॥ ५८ ॥

तिरस्कारः ॥ लोहवत् अयो धातुमिव ॥ वस्तायो
गोमष्टग्य ॥ आकृष्टुमाहर्तुं यत्नष्टं प्रयात्नष्टं ॥ ७ ॥ २८ ॥

उभेति ।। उभयोः शंभोर्मम च आहितं निषिक्तं वीर्यं
तेजः वोढुं सोढुं समर्था वा तस्य शंभोः अष्टमूर्तेः इयं त
दीया जलमयी मूर्तिर्वा उभे एव क्षमे वा शंद्वो [illegible] दुं

।। न चाग संगरमस्मीत्याह ।। उभे एव क्षमे ।।
।। वोढुमुभयोर्बीजमाहितं ।। सा वा शंभो ।।
।। स्तदीया वा मूर्त्तिर्जलमयी मम ।। ६० ।।

दार्थः ।। नत्वयोर्लौत्यर्थः ।। एतदेवोदाहरणेष
मेव व्याख्यातं गणव्याख्याने ।। अत्र दीपकालंकारः ।।

प्रस्तुताप्रस्तुताभ्यां प्राकरणिकयोरुमामहेश्व
रयोरप्रकरणिकयोर्ब्रह्मजलतरुत्यो श्चौपम्यस्य
गम्यत्वात्तु ॥ तथाहराजगनकः ॥ प्रस्तुताप्रस्तु
ताभ्यां चौपम्यस्य गम्यत्वे दीपकमिति ॥ नचेयंतुल्य
॥ तस्यात्मा शितिकंठस्य सैनापत्यमुपेत्य वः ॥
॥ मोक्ष्यते सुरबंदीनां वेणीवीर्यविभूतिभिः ॥ इति ॥
योगिता ॥ तस्याः केवलं प्रस्तुतं विषयत्वेन केवलाप्र
स्तुतविषयत्वेन चास्थानादिति ॥ इ० ॥ तस्येति ॥

तस्यशितिकंठस्यनीलकंठस्यात्मामूर्तिः पुत्रइत्यर्थः ॥
आत्मावैपुत्रनामासीदितिश्रुतेः ॥ वोयुष्माकंसेना
पतेर्भावः सैनापत्यं ॥ पत्यंतपुरोहितादिभ्ययकि
ति प्रालयः ॥ उपेत्य प्राप्य वीर्यविभूतिभिः ॥ शौर्यसंपद्भिः ॥
॥ इतिव्याहृत्यविबुधान्विश्वयोनिस्तिरोदधे ॥
॥ मनस्याहितकर्तव्यास्तेपिदेवादिवंययुः ॥ ६२ ॥
सुरबंदीनां बंदीकृतस्त्रीणां वेणीर्मोक्ष्यते ॥ विस्रंस
यिष्यति तारकं हनिष्यतीति भावः ॥ ६१ ॥ इतीति ॥ वि
श्वस्ययोनिः कारणं विश्वयोनिर्ब्रह्मा ॥ योर्षी स्त्रीणां

भगे स्थाने कारणे लौकिके पणे ३ लिंवे जयं ली॥ विबुधा
नूसुरानूव्याहृत्य अभिधाय॥ तिरोधदधे अंतर्हितवान् ८१
ते देवाः अपि मनसि आहितं कर्तव्यं ब्रह्मणोपदिष्टं यै
स्ते तथोक्ताः संतः दिवं स्वर्गं ययुः॥ द्विः२॥ तत्रेति॥ पाको
॥ तत्र निश्चित्य कंदर्पमगमत्पाकशासनः ८१
॥ मनसा कार्यसंसिद्धौ त्वराद्विगुणरंहसा॥ द्विः
नाम कश्चिद् असुरः तस्य शासनः शासकः पाकशास
नः इंद्रः तत्र हरचित्ताकर्षणे कंदर्पं निश्चित्य स सधाक
तेनेति शेषः॥ कार्यसिद्धौ त्वरयोत्साहेन औत्सुक्येन
द्विगुणो यस्य तद्द्विगुणं रंहो वेगो यस्य तेन तथोक्तेन॥

गुणस्त्वावृत्तिशब्दादिज्येक्रियामुख्यतं लुप्तिवि
वेजयं ली॥ मनसा अगमत्॥ ससस्मारेत्यर्थः॥ गर्भ
लेडू लुट् दित्वा सुरुषादित्य नेडू॥ दंरे॥ अथेति॥
॥ अथ सुललितलयोभिष्टुलेलाचारभृंगं रलि॥
रन्यम ॥ वलयपदांके चापमासज्यकंठे॥ सहचर॥
॥ मधुरस्त्रैंचूतांकुरास्त्रः शालमखमुपल॥
॥ स्वेष्प्रांजलिः पुष्पधन्वा॥ ६४॥
अथ स्मरणानंतरमेव यः स्मरतेरस्यर्थः॥ पुष्पं

३३

धनुर्यस्य सपुष्पधन्वा कामः॥ वासं छायामित्यनं

उनादेशः॥ ललितं त्रिषु लिंगेषु सुंदरमिति त्रयार्णा

वे॥ ललितायाः सुंदरायाः योषितो भ्रुवो ललते

व भ्रूलते व चारुणी मृंगे कोटीयस्य तत्तथोक्तं॥

चापं॥ रतिर्निजप्रियारपतिः स्मरप्रियायां चेति

विश्वः॥ तस्याः वलयपदानि कंकरणस्थानान्यं

कोयस्य तस्मिन्नूकंठे आसज्य लंबद्त्वा॥ चापं कं

ठविन्नोषणग्न्यां मृंगारे कनिघे स्त्रिभुवनैकवी ३३

रस्य तस्य मृंगारवीरोपकारणेषु तुल्यरसतं व्य

३२ ज्यते॥ सहचरस्य सख्युर्मध्योः वसंतस्य हस्तसेन्यस्तं
रतां कुरएवास्त्रेयस्य सः तयोक्तः प्रांजलिः कृतां
जलिः सन् सूत्रात्मरवमिन्द्रमुपतस्थे॥ संगतवान्॥
संगतकरणे आत्मनेपदं॥ अत्र स्वभावोक्तिरलं
कारः॥ स्वभावोक्तिरसौ चारु यथावद्वस्तु वर्णनं
मिति॥ मालिनी वृत्तमेतत्॥ ननमयययुतेयं
मालिनीभोगिलोकैः॥ ६४॥ इति श्रीमन्महोपा
ध्या॰ संजीवि॰ द्वितीयः सर्गः॥ ७॥ ७॥ ७॥
७॥ ७॥ ७॥ ७॥ ७॥ ७॥ ७॥ ७॥ ७॥ ३३॥

